यदेव शास्त्रं सांख्योक्तं योगदर्शनमेव तत् ॥ ४२
प्रबोधनकरं ज्ञानं सांख्यानामवनीपते ।
विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ॥ ४३
बृहच्चैव हि तच्छास्त्रमित्याहुः कुशला जनाः ।
अस्मिंश्च शास्त्रे योगानां पुनर्दधि पुनः शरः ॥ ४४
पञ्चविंशात्परं तत्त्वं न पश्यति नराधिप ।
सांख्यानां तु परं तत्र यथावदनुवर्णितम् ॥ ४५
बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः ।
बुध्यमानं च बुद्धं च प्राहुर्योगनिदर्शनम् ॥ ४६

C. 12 11468
B. 12 306(7).48
K 12. 312. 46

इति श्रीमहाभारते शान्तिपर्वणि पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

सांख्ययोग (for °योगौ) V1 प्रोक्त° —[b]) K6 B5 (marg as in text) शास्त्रतत्त्व (for °द्वय-). —[c]) M1. 5–7 शास्त्रे (for शास्त्र) K6 7 B6 8 9 Ds2 G2 यदेव सांख्यशा(Ds2 °ख्ये शा)स्त्रोक्त, D7 T G1 3 6 यदेव सांख्या° पश्यति —[d]) D9 सांख्य (for योग)

43 [a]) K6 ज्ञेयं (for ज्ञान) K2 Da4 प्रबोधनरक (Da4 °क)ज्ञानं —[b]) K6 अवनीपति —[c]) K1 2 4 विस्पष्ट; K7 D4 9 विशिष्टं; Da4 T2 विसृष्ट (for विस्पष्ट) K6 Ca (gloss पटिष्ठे) तत्रे; G2 तर्ह्रे (for तत्र) —[d]) M1. 5–7 शिष्याणा हितकृन्मया.

44 [a]) D7 T G1 3.6 पृथग् (for बृहच्) K1 2 4 अप्येव तद्, K6 V1 Bo 6–9 Da3 a4 Dn1 n4 D8 D2 3.8 चैवमिदं; D5 G1 स्वे(G1 स्वै)व हि तद् (for चैव हि तद्). G2 वि* वेदपि तच्छास्त्रम् —[b]) Da3 a4 ऊचुर् (for आहु°) K6 V1 Bo 6 7 8 (marg) 9 Da3 a4 Dn1 n4 D8 D2 3 8 विदुषो (for कुशला) K1. 2 4 नरा° (for जना°) —[c]) B8 यस्मिन्नू (for अ°) K7 lacuna, T2 G1 शास्त्र (for शास्त्रे) —[d]) K1 पर° शर°; Bo 9 पुर°सर°; B8 पुन° सर° (for पुन शर°). K4 7 B5 7 Da3 a4 Dn1. n4 D8 D2–4. 8 9 Cn पुन वेंद्रे (K7 D4 9 °द्वैं) पुर°सर (D8 °रः) ❀ Ca (reading स[श]राद्दधि पुन° स[श]र°) यथा शरात् दधि, मण्डो दध्नादिना दधि, तत° शर°, इति अधो धारयन्ती अनवस्था अनादितया परिक्रियते ॥ Cn (reading पुनर्वेद्रे पुर सर°) सांख्यशास्त्रे वेदे च अत्यन्तमादरोऽस्ति ॥ Cp (reading यथा वेदे पुर°सर°) पुर सर प्रवेश । स वा दधि पुन सर° इति पाठे, दधि सर°क्षेपाद्यथा दुग्धानन्तर दधि भवति, दधिभावा नन्तर च पुन° सरो भवति, तथा योगानामस्मिन् शास्त्रे सक्षेप विस्तराभ्यामपेक्षितप्राप्तिरित्यर्थ° ॥ Cs (reading अस्मिञ्शा स्त्रेषु योगानां न दधीचिपुर°सरा) दधीचिप्रभृतय पञ्च विंशात्पर ससारव्यतिरिक्त परमात्मान पश्यन्तीत्यर्थः । ❀

45 [a]) B4 7 Da3. a4 G2 M1 5–7 तत्र (for तत्त्व) — Ds1 om (hapl) 45[c], D4 reads the same twice —[b]) K6 V1 Bo 6–9 Da3 Dn1 n4 D2 3 8 पश्य(B6 7 D8 °श्ये, D5 °श्य)ते न, Da4 य° पठेत; Ds2 पश्यति च; T2 न पश्यति, G2 M1 5–7 न पश्यति (for न पश्यति) K7 नराधिप° —[c]) K7 V1 D4 (both times) 5 9 च (for तु) K7 [अ]पर (for परं) K7 V1 Bo 6 (marg) 7 8 Da3. a4 Dn1 n4 Ds2 D2 3 4 (both times) 8 9 Cp तत्त्व; T2 G2 तत्र (for तत्र).

46 [a]) Bo 7 Da3 Dn1 n4 D8 D2 3 8 बुद्धत्वाद् (for -बुद्ध च). D7 T G1 3 6 प्रबुद्धमप्रबुद्ध च — V1 reads 46[bc] on marg —[b]) K2 om च —[c]) K4 वध्यमानं, Da4 बुद्ध°; D5 बुध्यमाने (for °मान) B8 (marg) बुद्धत्व, Da4 बुध्य च D7 T G1 3 6 प्रबुद्ध (T2 °ध्य) बुध्यमान च —[d]) Ds1 प्राहुयुर् (hypermetric), D7 G1 प्राह (for प्राहुर्) K7 D4 5 9 -निदर्शनात् (for °र्शनम्) ❀ Ca बुद्धादित्रये द्वयमात्मज्ञान प्रकाशकम् ।

Colophon Ś1 D6 missing K3. 5 B1–5 Da1 a2 Dn2 n3 D1 G4 5 M2–4 absent — *Sub-parvan* K1. 4 6 7 V1 Bo 6 7 9 Da3 a4 Dn1 n4 D8 D2–5 7–9 T G1–3 6 M1 5–7 मोक्षधर्म; K2 दानधर्म — *Adhy name* K1 2 4 V1 B6 D8 करालजनकसवाद°; K6 Bo. 7–9 Da3 a4 Dn1. n4 D2 3 7 8 वसि(B9 °षि)ष्ठकराल (D7 °ळ)जनकसवाद°; K7 D4 9 करालजनकसंवादे विद्याविद्या; D5 वसिष्ठकरालजनकसंवादे विद्याध्याय°, T1 कराळजनकसवादे क्षराक्षरविभाग, G6 वसिष्ठकराळजनकसवादे क्षराक्षरविभाग°; M5 6 वसिष्ठकराळजनकसंवादे विद्याविद्याकथन. — *Adhy no* (figures, words or both) K6 31, B7 Ds2 T1 G1. 6 130, B8 134, Dn1 133, Dn4 132, Ds2 G8 M6 131, D8 128, T2 143, G2 146, M1. 6 7 129 — *Śloka no*: Da4 Dn1 48, Dn4 D8 47, Ds1 42.

# २९६

C. 12. 11466
B 12. 309(8).1
K. 12 313 1

वसिष्ठ उवाच ।

अप्रबुद्धमथाव्यक्तमिमं गुणविधिं शृणु ।
गुणान्धारयते ह्येषा सृजत्याक्षिपते तथा ॥ १
अजस्रं त्विह क्रीडार्थं विकुर्वन्ती नराधिप ।
आत्मानं बहुधा कृत्वा तान्येव च विचक्षते ॥ २
एतदेवं विकुर्वाणां बुध्यमानो न बुध्यते ।
अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि ॥ ३
न त्वेव बुध्यतेऽव्यक्तं सगुणं वाथ निर्गुणम् ।
कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकम् ॥ ४
बुध्यते यदि वाव्यक्तमेतद्वै पञ्चविंशकम् ।

## 296

☞ This adhy is missing in Ś1 D6 (cf v l. 12 274 13, 283 15)

1 K7 B9 D4 वशिष्ठ —$^{a}$) Da4 अथ बुद्धम्, D8 अबबुद्धम्; Ca (gloss निसर्गतोऽचेतनम्) Cs (gloss. चैतन्यहीन) अप्र° (as in text) G3 इह (for अथ). Dn1. n4 D8 D2 8 8 अय बुद्धमथाबुद्धम् ❀ Cn बुद्ध, बोध परमात्मा, अबुद्ध, तदन्यो जीव । ❀ —$^{b}$) B8 इदं (for इम) K4 गुणविध; K6 7 B6 7 9 Da3 a4 D4 5 7 9 T G1 3 6 Cp 8 °निधिं (for °विधिं). ❀ Cn. गुणविधिं, गुणानां सत्त्वादीनामेव विधिं विधानं प्रभावम् ॥ Cp (reading °निधिं) गुणानां साम्यरूपम् । यद्वा गुणानां सर्वज्ञतातृप्तिप्रभृतीनां निधानम् । Cs गुणनिधिं, गुणानामाधारम् । ❀ — K1 2 4 read and K6 Da4 G8 repeat $1^{cd}$ after $3^{ab}$ V1 Bo Dn1. n4 D8 D2 8 Cn. 8 read $1^{c}$–$2^{b}$ after $3^{ab}$. —$^{c}$) K6 (second time) कारयते, K7 D4 9 धारयति (for °यते). K1 2 4 ह्येपा, K6 (first time) V1 Bo 6–9 Da3 a4 (both times) Dn1. n4 D2 8 G6 ह्येग (for ह्येषा). —$^{d}$) K1 आक्षपते; G1 आक्षापिते (for आक्षिपते). B8 Dn1 n4 D8 D2 3. 8 सदा; T2 G6 यथा (for तथा) ❀ Cp सृजति, सृष्टिकाले । आक्षिपते, संहारकाले । ❀

2 For the sequence in V1 Bo Dn1. n4 D8 D2 8 Cn. 8, cf. v l 1 —$^{a}$) K1 2 4 D7 T G1 3 6 इह (for त्विह) K7 D4 5. 9 अजस्र (K7 °स्र) क्रीडनार्थं हि —$^{b}$) K1 6 V1 Bo 9 Da3 D5 7 T G2 3 6 विकुर्वति (D5 °तं), K2 corrupt, K7 Da4 Dn1 n4 D8 D2–4 8. 9 विकरोति, B6–8 G1 Cp (gloss: आत्मानं विविधरूपं करोति) विकुर्वति (for °र्वन्ती) K6 7 V1 Bo 6–9 Da3 a4 Dn1 n4 D8 D2–5 8 9 G2 जनाधिप (for नरा°) —$^{c}$) ❀ Cn बहुधा, विश्वतैजसप्राज्ञविराट्सूत्रान्तर्यामिरूपेण । ❀ —$^{d}$) K1 तथैव; K7 D4. 5 9 तानेव; D7 तत्रैव (for तान्येव). K6. 7 D4 5 9 मपते पुन; V1 Bo 6 (marg). 7 8 Dn1 n4 Ds1 D2. 3 8 Cn (gloss: साक्षित्वेन पश्यति) प्रविच (V2 Dn4 प्रतिच, D2 प्रविव) क्षते; B6 9 Da3 a4 Ds2 प्रति (Da4 °वि) वक्ष्यति (Ds2 °ते), M1 5–7 Ca (gloss बोढुमिच्छति) च विवक्षति, Cp (gloss: आत्मसात्प्रविकर्तुमिच्छति) प्रविवक्ष्यति, Cs (gloss. प्रवेष्टुमिच्छति) प्रविविक्षति (for च विचक्षते)

3 For the sequence in V1 Bo Dn1. n4 D8 D2 8 Cn 8, cf. v l 1 —$^{a}$) K7 D4 8 9 एताम् (for एतद्). G2 एव (for एवं) K1. 2 4 6 V1 Bo 6–9 Da3 a4 Dn1 n4 D2 8 विकुर्वाणो; D7 T1 G1–3. 6 °र्वाणं; D8 °र्वाणा (for °र्वाणां). D5 एतामेव हि कुर्वाणा, T2 एव देव हि कुर्वाणं —$^{b}$) B9 Da4 बुध्यमान; G2 °माने; Cn (gloss जीव) °मानो (as in text). T2 तु (for न) — After $3^{ab}$, K1 2 4 read and K6 Da4 G8 repeat $1^{cd}$ $3^{cd}$ = $6^{cd}$ —$^{c}$) K1 बोधनश्च (for °बोधनाच्). D8 चापि; T1 G6 चैव; T2 G3 Cp (gloss षड्विंश) चैन (for चैव) D5 असक्तबोधनाच्चैव; D7 G1 अव्यक्त बोधन चैव (G1 °नं) ❀ Cv. अव्यक्तबोधनाच्चैव, व्यक्तं स्पष्ट प्रत्यक्ष न भवतीति अव्यक्तं अनुमितिरूप ज्ञानम् । ❀ —$^{d}$) K6 7 B6 Dn1 D4 5 7 9 T G1 3 6 उत (for अपि). ❀ Cp बुध्यमानं, पञ्चविंशम् । ❀

4 D5 7 G1 om (hapl) 4–6. —$^{ab}$) K6 नन्वेव; K7 D4 तत्त्वेव; Dn4 न ह्येव; T G3 6 न त्वेनं (for न त्वेव). K6 V1 Bo 6–9 Da3 a4 Dn1 n4 D8 D2 3 8 G2 तात; M1 5–7 न तु (for वाथ) B7 Da4 T1 G6 निर्गुण (for °णम्) ❀ Cn अव्यक्तं कर्तृ, सगुणं रूपादिमत् निर्गुणं प्रधानपुरुषौ वा, न बुध्यते, अचेतनत्वादव्यक्तस्य । अत एव तदप्रतिबुद्धक, जडमित्याहु । ❀ —$^{c}$) K1 2 6 B9 एव, K7 D4 9 त्वय (for त्वेव). K1 2 कल्पेत (for खल्वेतद्) ❀ Cs कदाचित्, कल्पे । ❀ —$^{d}$) K1 2 चाहुर् (for आहुर्). T1 G3 बंधक; T2 °बुध्यक, G6 बद्धकं (for बुद्धकम्). Da3 तदाहु प्रतिबुद्धक

बुध्यमानो भवत्येष सङ्गात्मक इति श्रुतिः ॥ ५
अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युतम् ।
अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्युत ॥ ६
पञ्चविंशं महात्मानं न चासावपि बुध्यते ।
षड्विंशं विमलं बुद्धमप्रमेयं सनातनम् ॥ ७
सततं पञ्चविंशं च चतुर्विंशं च बुध्यते ।
दृश्यादृश्ये ह्यनुगतमुभावेव महाद्युती ॥ ८
अव्यक्तं न तु तद्ब्रह्म बुध्यते तात केवलम् ।
केवलं पञ्चविंशं च चतुर्विंशं न पश्यति ॥ ९
बुध्यमानो यदात्मानमन्योऽहमिति मन्यते ।
तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः ॥ १०
बुध्यते च परां बुद्धिं विशुद्धाममलां यदा । C. 12. 11476 B. 12. 309(?). 10 K 12. 313 10

---

5 D5 7 G1 om 5 (cf v 1 4) — a) K2 बुध्येत (for बुध्यते) B7 D8 4 च (for वा) — b) B9 एतच्च, G2 एन वै (for एतद्वै) K7 D4 9 T1 G8 6 पचविंशकः (for °विंशकम्) ❀ Cn अव्यक्त कर्तृ, यदि जानाति तर्हि पञ्चविंशकं चिदाभासमेव उपाधिविशिष्टमयमहमस्मीति जानीयान्न तु षड्विंशममङ्गम् । ❀ — c) K4 वध्यमानो; K1 बुद्ध°, Da3 a4 बुध्यमान, Dn4 °माने; D4 °माना, Cn (gloss पञ्चविंश ससङ्गात्मकश्चिद्रूपोऽहंकार°) °मानो (as in text) K1 2 भवतु (for ति) B8 Dn1, n4 D8 D2 8 8 एव (for एष) — d) M1 5–7 सांगात्मक (for सङ्गा°) ❀ Cs सङ्गात्मक°, शब्दादिविषयरक्तः, ससारी । ❀

6 D5 7 G1 om. 6 (cf v 1 4) — a) K2 Dn1 Ds2 प्रतिबुद्धे(K2 °द्धे)ति; K6 7 B7 Da3 Dn4 D2 8 [अ]प्रतिबुध्ये(D8 °ध्वे)ति (for °बुद्धेति) ❀ Cn अनेन, सङ्गात्मकेन हेतुना । अविकारिणमपि सन्तमेवं पुरुषं अप्रतिबुद्धं मूढ इति वदन्ति । सधिरार्प° । ❀ — b) B9 6 7 9 Da4 G2 अच्युत; T G6 अप्युत (for अच्युतम्) — 6cd = 3cd — c) K1 बोधनश्च, K2 4 T2 -बोधनाश्च (for °नाच्) Dn1 n4 D8 D2 8 8 चापि, D4 चैव (for चैव) — d) T G8 6 अपि (for उत) ❀ Cn बुध्यमानं जीवं पञ्चविंशं चिदाभासं वदन्ति । चिदाभासोऽपि दृश्यत्वान्नान्यं द्रष्टुमीष्टे । ❀

7 a) K1 Ds2 पचविंश (for °विंश) Da3 इहात्मान, G1 अया° (for महा°) M1 5–7 पचविंशकमात्मानं — K2 4 om (hapl) 7c–8b — c) Da4 Ds2 M1 षड्विंश, G2 षड्विंशो (for °श) D5 reads from बुद्ध up to केवलम् (in 9b) twice D7 यद्धम् (for बुद्धम्) ❀ Cn षड्विंश, निरुपाधिचैतन्यम् । सर्वप्रकाशकमित्यर्थ । ❀ — d) T2 अप्रमेय (for °मेय)

8 For the repetition in D5, cf v 1 7 K2 4 om 8ab (cf v 1 7) — a) K7 B8 D4 7 9 T G1 3, 6 Cp स तु त, B9 सतत°; Cpp (gloss व्याप्त) स तत (for सततं) D7 G1 M7 पचविंशाच् (for °विंश) — b) K7 D3 चतुर्विंशां; Da3 lacuna, D7 G1 M7 पचविंशाच् G2 तु (for च) — c) D4 दृश्या**; D7 T1 G1–3 6 Cs (gloss चेतनाचेतनौ) दृश्यादृश्यौ; Cp (gloss अव्यक्तपुरुषस्वभावे) °दृश्ये (as in text) K6 B6 8 Dn4 Cp ह्यनुगते; K7 D4 5 (both times) 7 9 T G1 3 6 Cs °गताव् (for °गतम्) — d) K2 4 अभागेव; K6 V1 B6 6–8 Dn1 n4 D8 D2 8 स्वभावेन, (for उभावेव) K4 महाद्युतिं; K7 °द्युति; V1 B6 6 (marg) 8 Dn1 n4 D8 D2 8 द्युते, D8 महोद्यत; T1 G1 6 महाद्युति° (for °द्युती) ❀ Cn षड्विंशस्य स्वरूपे मानमाह—दृश्येति । कार्ये कारणे च स्वभावेन स्वसत्तयानुगतं सन्मात्रं केवलं वस्तु षड्विंशशब्दितमित्यर्थ । ❀

9 For the repetition in D5, of v 1 7 — a) K1 अविक्तं (for अव्यक्त) K6 D7 T1 G1 3 6 तत्तु; V1 B6 9 Dn1 n4 D8 D2 8 8 अत्र; D5 (both times) चात्र (for न तु) T2 अव्यक्तस्यस्तु तद्ब्रह्म — c) D7 G1 M1. 5–7 पचविंशाच् (for विंश) K1 2 4 V1 G2 तु (for च) B6 7 Da3 a4 D5 पचविंश चतुर्विंशं — d) K2 7 D4 9 चतुर्विंशो; B9 G2 °विंशे, D7 M1 5–7 °विंशाच् (for °विंश) K7 तु, D7 T G1 3 6 M1 5–7 च (for न) B6 7 Da3 a4 D5 आत्मान च स (B6 Da4 न स; D5 स च) पश्यति

10 b) K1 4 Da4 Ds2 (before corr) अन्ये (for अन्यो) M1 अन्योह मन्यते तदा — c) K6 Dn1 यदा; M1 lacuna (for तदा) Ds2 M1 6 7 एषु (for एष) ❀ Cn प्रकृतिमान्, प्रकृतिजयी । ❀ — d) K4 G1 लोचन, T1 G8 6 मोचन (for लोचन) T2 भवेद् व्यक्तलोचन°

11 a) K2 7 Ds1 D4 5 9 च परं; K6 चापरां; D7 T G1 3 6 M1 5–7 Cs (gloss निरतिशयानन्दस्वरूप) परमं (for च परां) K6 बुद्धि-, K7 D4 9 बोध्य, D5 T2 M1 5–7 Cs (gloss स्वप्रकाश) बुद्धं, T1 G8 6 बुध्यं (for बुद्धिं) — b) K7 Ds2 D4 5 7 9 T G1 3 6 M1, 5–7 Cs (gloss सर्वदोषहीन) विशुद्धम्; B8 D2 8 विमलाम्; G2 विबुद्धम् (for विशुद्धाम्) K1 2 4 अचलं (K1 °लो) यया, K7 D4 5 9 अचल सदा, D8 D7 T

C. 12. 11478 B. 12. 308(6). 11 K. 12. 313. 11 पञ्चविंशो राजशार्दूल तदा बुद्धत्वमाव्रजेत् ॥ ११
ततस्त्यजति सोऽव्यक्तं सर्गप्रलयधर्मिणम् ।
निर्गुणः प्रकृतिं वेद गुणयुक्तामचेतनाम् ॥ १२
ततः केवलधर्मासौ भवत्यव्यक्तदर्शनात् ।
केवलेन समागम्य विमुक्तोऽऽत्मानमाप्नुयात् ॥ १३
एतत्तत्त्वमित्याहुर्निस्तत्त्वमजरामरम् ।
तत्त्वसंश्रयणादेतत्तत्त्ववन्न च मानद ।
पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः ॥ १४
न चैष तत्त्ववांस्तात निस्तत्त्वस्त्वेष बुद्धिमान् ।
एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धस्य लक्षणम् ॥ १५
पञ्चविंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः ।
केवलेन बलेनैव समतां यात्यसंशयम् ॥ १६
पञ्चविंशेन प्रबुद्धेन बुध्यमानोऽप्यबुद्धिमान् ।
एतन्नानात्वमित्युक्तं सांख्यश्रुतिनिदर्शनात् ॥ १७

G1 3 6 C8 (gloss कूटस्थ) अचलोपम, M1 6–7 अमलामलं (for °लां यदा) — c) K1 शाड्विंशो; K4 षाड्विंशे; Ds1 D7 T1 G1 3 6 M1 6–7 °शं; Ds2 °शा (for °शो) K6 राजसार्दूल — d) V1 B0 7 8 Dn1 n4 D6 D2 8 8 तथा (for तदा). K7 D4 9 तदासौ बुद्धतां व्रजेत्; B6 9 Da3 a4 D7 T G1–3 6 M1 6–7 तदा (Da3 a4 °था) बुद्धत्वतां व्रजेत्; D5 तदा तच्छुद्धतां व्रजेत् ❀ Ca बुद्धत्व, विमुक्तात्मानम् । ❀

12 b) Ds2 सर्वं; D4 सर्गे (for सर्ग-). K1 प्रालय; T G1–3 6 M7 प्रळय (for -प्रलय). K4 Dn1 D6 D2 8 8 -धर्मि वै; Da4 धर्मिणां; G1 °णि, G3 °णीं (for °णम्) — c) B7 9 Da3 a4 Cp (gloss परमानन्दापरकत्वेन दुःखप्रदत्वेन च गुणहीनां) निर्गुणां; M1 6 7 C8 (gloss ब्रह्ममात्र) निर्गुण (for °णः). — d) K1 अचेतनं

13 a) ❀ C8 केवलधर्मा, केवलस्य ब्रह्मणो धर्मोऽसंसारित्वादिरूपो यस्य सः । ❀ — b) M1 6–7 मोचनात्; C8 लोचनात् (for -दर्शनात्) — c) ❀ Cp केवलेन, पञ्चविंशेन । ❀ — d) K1 2 4 6 Da3 a4 Ds1 T1 G6 C8 विमुक्तात्मानम्; D5 विमुक्तात्मानम्; G2 विमुक्तो ज्ञानम् (for विमुक्तोऽऽत्मानम्) ❀ Cp [आ]त्मानं, स्वरूपम् । ❀

14 a) D7 T G1 3 6 एव (for एतत्). K4 6 V1 B0 6–9 Da3 Dn1 n4 D6 D2 8 8 C8 तु; K7 ते; D7 T G1, 3 6 M1, 6–7 C7 वै (for तत्). D5 एतत्तत्त्वमिति प्राहुर् — b) V1 नित्यत्वम्; G1 निःसत्त्वम्; Cp (gloss निष्प्रकारकम्) C8 (gloss महदादिसंबन्धशून्यम्) निस्तत्त्वम् (as in text) D7 G1 अजरामय (for °मरम्) ❀ Cn निस्तत्त्वं, कार्यकारणवर्जितं । ❀ — c) K6 तत्र; M1 6–7 तत (for तत्त्व) K2 4 -संश्रवणा(K4 °सा)द् (for °यणाद्). K1 2 4 7 V1 B8 (marg as in text) D4 9 एव, K1 (also) D7 T G1 3 6 एष (for एतत्) ❀ C8 तत्त्वसंश्रयणात्, अविद्याकार्यशरीरे जीवभावेन प्रवेशात् । ❀ — d) K1 2 D7 T G1, 3, 6 तत्त्ववान्; B8 (marg as in text) तत्त्वत्व, C8 तत्त्ववन् (as in text). C8 तु (for च) K1 (sup lin as in text) मादन, Ds2 C8 मानत; G3 M1 6–7 मैथिल (for मानद). — e) K1 V1 B0 6 8 9 Da3 a4 -तत्त्वेति, K3 G1 तत्त्वेन, D7 तत्त्वे च (for तत्त्वानि) ❀ Cp अत एव तत्त्वपदं पञ्चविंशावेव कपिलादयः प्रयुञ्जते । ❀

15 G3 reads 15 twice — a) D4 वैष, M1 6–7 चैव (for चैष) D7 G1 तातस् (for तात) — b) K1 निस्तत्त्वास् Da3 a4 एष; D5 ह्येव, T2 स्वेषु (for स्त्वेष). D7 G1 ते स्वस्तेम बुद्धिमान् (sic) — K1 om. (hapl.) 15c–17b — c) K6 एव; K7 D4 9 एवं (for एष). ❀ Cn तत्त्वं, अहं ब्रह्मास्मीति वृत्तिमपि एष मुञ्चति ॥ C8 तत्त्वं, अविद्या तत्कार्यं च । ❀ — d) Ds2 क्षिप्रः; C8 (gloss विद्योत्पत्तिसमकाल) क्षिप्रं (as in text) Da4 D2 8 बुद्धस्व; Ds2 G3 (both times) बुद्धस्व; D5 बुध्यश्च; D7 G1 बुद्धासु; T1 G6 बुद्धा सु; T2 बुद्धा स्व-; M1 6 बुध्यस्य (for बुद्धस्य)

16 K1 om 16 (cf v l 15). — a) K2 पाड्विंशो; B7 यड्विंशो B0 अति (for इति) — b) K7 D4 8 बुध्यमानो; Ds1 गृह्यमानो (for °माणो) D5 बुद्धिमान जरामरः — c) D5 [अ]बलेन (for बलेन). — d) K7 G1 समता; C8 (gloss एकत्व) समता (as in text). K7 G1 असंशयः ❀ Cn बलेन, स्वसामर्थ्येन । यथा कतकरजो रजोन्तरं शमयत्स्वयमपि शाम्यति, तथा चरमा ब्रह्माकारा वृत्तिः वृत्त्यन्तरं स्वात्मानं च शमयतीत्यर्थः ॥ Cp बलेन, ज्ञानबलेन । ❀

17 K1 om. 17ab (cf v l 15). — a) K3 G1 प्रबुध्येन; D5 G2 प्रवृद्धेन (for प्रबुद्धेन) — b) K4 बध्यमानो; Da4 बुद्ध°; D6 G1 बुद्धि° (for बुध्य°). K3 4 7 D4, 7 9 T G1, 3 6 हि (for ऽपि) K3 बुध्यमान्; D9 अबुध्यमान्; G3 M1 6–7 बुद्धिमान् (for अबु°). — c) Da4 एतान्, D7 T G1 3, 6 M1, 7 C8 एव (for एतन्). ❀ Cp एतत्, पञ्चविंशाभेदेनात्मनो

चेतनेन समेतस्य पञ्चविंशतिकस्य च ।
एकत्वं वै भवत्यस्य यदा बुद्ध्या न बुध्यते ॥ १८
बुध्यमानोऽप्रबुद्धेन समतां याति मैथिल ।
सङ्गधर्मा भवत्येष निःसङ्गात्मा नराधिप ॥ १९
निःसङ्गात्मानमासाद्य षड्विंशकमजं विदुः ।
विभुस्त्यजति चाव्यक्तं यदा त्वेतद्विबुध्यते ।
चतुर्विंशमगाधं च षड्विंशस्य प्रबोधनात् ॥ २०

एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ।
प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुतिनिदर्शनात् ।
नानात्वैकत्वमेतावद्द्रष्टव्यं शास्त्रदृष्टिभिः ॥ २१
मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोः ।
मत्स्योऽम्भसि यथा तद्वदन्यत्वमुपलभ्यते ॥ २२
एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः ।
एतद्विमोक्ष इत्युक्तमव्यक्तज्ञानसंहितम् ॥ २३ C. 12. 11490 B 12 208(a).24 K 12. 213 24

ज्ञानम् । ꕥ —d) K1 D4 9 सांख्यै ; D5 1 G1 सांख्ये ; T1 सर्वा ; T2 सांख्यं (for सांख्य-) Da3 तत्त्व (for श्रुति-) K1 2 4 B8 (marg as in text) M1 1 निद र्शन (for °र्शनात्)

18 a) D1 T G1 2. 6 [अ]समेतस्य (for समे°) ꕥ C8 समेतस्य, चैतन्याभासयुक्तान्तःकरणसंसृष्टस्य । ꕥ —b) V1 B0 6 8 9 Dn1 n4 D8 D2 8 8 ह (for च) K1 D3 9 पचविंशतिकेन च —c) K1 1 V1 D4 9 तदा तस्य ; D1 T G1. 3 6 भवेत्तस्य (for भवत्यस्य) K2 एकत्व चैकदा तस्य ; G2 °त्व चैव तत्त्वस्य —d) K1 2 यदि ; T2 यथा (for यदा) M1. 5–1 C8 [अ]नु- (for न) ꕥ Cn बुद्ध्या न बुध्यते, धीनिरोधे सति गाढसुषुप्ति वत् षड्विंशानुभव इत्यर्थः । ꕥ

19 a) D4 corrupt K2 Da4 [ऽ]प्रबुध्येन ; D1 G1 °ध्येत ; Cn (gloss वाङ्मनसातीततया अगोचरीकृतेन) °द्धेन (as in text) —b) K1 ममतां ; K1 समेतां (for समतां) K1. 2 4 [अ]पशयं (for मैथिल) —c) Dn4 G2 सगधर्मो (for सङ्गधर्मा) G3 एषां (for एष) K1 2 4 6 सगधर्मेव( K2 4 °वि )दित्येष ; D1 G1 सत्सग स्याभवत्येष (sic) —d) K6 निःषगात्मा ; D1 G1 निः- संगाख्यो (for निःसङ्गात्मा) G1 रसाधिप (for नरा°)

20 a) K1 Da4 निसगा( K1 °धा )त्मानम् D1 G1 निःसगाख्यो नराधस्य —b) D1 G1 षड्विंशजम् (for °कम्) K1 Dn1 n4 D8 D2 8 5 1 8 T G3 6 विभु ; D3 9 G1 विभु (for विदु ) —c) D6 विभु (for विभुस्) K1 2 4 V1 सोव्यक्त, K6 च व्यक्तं ; K1 D4 9 वाव्यक्त (for चा°) ꕥ Cv विभुः समर्थः सन्, अव्यक्तं अव्य क्तमूलं महाहमित्यहकारं, त्यजति । ꕥ —d) B8 नु (for तु) D1 G1 त्वेनद् (for त्वेतद्) K1 विमुच्यते ; K1 D4 5 9 प्रबुध्यते, G2 हि बु° (for विबु°) G3 यदा त्वेतस्य बुध्यते —e) K1 2 4 महागाध ; K6 B0 6–9 Da8. a4 Dn1 n4 D8 D2 8 8 असार च ; D1 T1 G1 2. 6 महाभाग ; G3 अभावं च (for अगाध च). —f) K1 प्रभोधनात् (sic)

21 Da1 om 21abcd —a) ꕥ Cn अप्रतिबुद्धः क्षरः, बुध्यमानः अक्षरः । ꕥ —b) D1 G1 तेन च (for तेऽनघ) —c) D5 G3 बुधश्च ; D1 T1 G1 6 बुद्धिश्च, Cn (gloss ईशः) बुद्धश्च (as in text) ꕥ Cv अप्रति बुद्धः मन्दमतिभिः, सुबुद्धिभिश्च प्रतिबुद्धो नारायणः । तत्त्वतः ते बुध्यमान इव यथा भवति तथा प्रोक्तः इति योजना । ꕥ —d) K1 2 4 नि( K1 -धि )दर्शन (for °र्शनात्) —e) ꕥ C8 नानात्व च एकत्व च नानात्वैक त्वम् ॥ Cv नानात्वं च एकत्वं चेति द्वंद्वसमासे कृते तस्यापि पुनरेकीभावे नानात्वैकत्वमिति शब्दनिष्पत्तिरिति ज्ञेयम् । ꕥ —f) K6 V1 B0 6–9 Da8. a4 Dn1. n4 D8 D2 8 8 -दर्शनात् (for दृष्टिभिः)

22 a) K1 2 4 मषकोडं( K2 °कोडुं )बरे, B0 मसको दुबरे ; Da4 Dn2 M1 5–1 मशकोडुबरौ ( Da4 Dn2 M1 °रो ) (for °दुम्बरे) —b) K6 तत्त्वम् (for तद्वद्) —c) K6 1 V1 B0 6–9 Dn1 n4 D8 D2–5 8 9 मत्स्यो दके ; Da8. a4 D1 T1 G1 6 मत्स्यांभसि (for मत्स्योऽम्भसि) D6 तथा, G2 तदा (for यथा) G2 यद्वद् (for तद्वद्) —d) K1 -पद्यते, Da4 लभ्यसे (for लभ्यते)

23 a) K1 V1 B6–9 Da8 a4 च, D9 हि (for [अ]व-) V1 B8 मतव्यं (for -गन्तव्य) —b) K1 D4 G1 नानात्वेकात्वम् —c) D5 एवं (for एतद्) K6 1 Da8 a4 Dn1 n4 Ds1 D2 8 G2 C8 हि (for वि ) D4. 1 T G1. 3 6 विमोक्षम्, M1 विमोक्त (for °क्ष) K6 D5 इत्युक्तो (for °क्तम्) —d) B8 G2 अव्यक्त ; D5 ह्यव्यक्त-, D1 T1 G1 3 6 अज्ञानं, T2 अज्ञान (for अव्यक्त-) K1 2 4 B8 D1 T G2. 6 -सज्ञित ; D5 सहित ; G1 सज्ञिक, G2 सपदं ; Cn (gloss -विषयम्) संहितम् (as in text) C8 ज्ञानमज्ञानसहित ꕥ C8 ज्ञानं, स्वप्रकाशब्रह्मस्वरूपम् । नानात्वमज्ञानम् । तेन संहितं संस्पृष्टं, संसारावस्थायाम् । ꕥ

C 12 11490 B 12.209(61).25 K 12.313 25 पञ्चविंशतिकस्तस्य योऽयं देहेषु वर्तते ।
एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् ॥ २४
सोऽयमेवं विमुच्येत नान्यथेति विनिश्चयः ।
परेण परधर्मा च भवत्येष समेत्य वै ॥ २५
विशुद्धधर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥ २६
नियोगधर्मिणा चैव नियोगात्मा भवत्यपि ।
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् ॥ २७
शुचिकर्मा शुचिश्चैव भवत्यमितदीप्तिमान् ।
विमलात्मा च भवति समेत्य विमलात्मना ॥ २८
केवलात्मा तथा चैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते ॥ २९
एतावदेतत्कथितं मया ते
तथ्यं महाराज यथार्थतत्त्वम् ।

---

24 b) B9 सो (for यो) K2 चित्तेषु; B9 D7 G1 देशेषु (for देहेषु) ❀ Cp देहेष्विति बहुवचनादेक एव सर्वदेहवर्ती । ❀ — c) K1, 2 एष मोक्षवि(K2 °य)तव्येति; Cp एष मोचयितव्येति — d) K1 2 °गोचरा; B9 (marg as in text) °दर्शनात्, G3 गोचरान् ❀ Cs अव्यक्तगोचरात्, अज्ञानकार्यसंसारात् । ❀

25 a) D5 G1 सोऽहम्; M1 6-7 योयम् (for सोऽयम्) G3 एव (for एवं). D8 विमुचेत — b) D6 नास्योत्पत्ति (for नान्यथेति) ❀ Cp नान्यथा, कर्मादिभि° । ❀ — c) K1 3 4 परे च, V1 B0 6-9 Da3 a4 Dn1 n4 D8 D2 3 5 8 G2 M1 6-7 परश्च (for परेण) K1 परधर्माश्च, K7 D9 °धर्मैर्वा; D4 7 T1 G1 3 6 °धर्मे च (D4 वा); Cs (gloss समारिभिर्भिन्नताख्यधर्मवान्) °धर्मा च (as in text) ❀ Cv परेण संसारिभ्यो भिन्नेन नारायणेन । ❀ — d) D6 एव (for एष)

26 K7 om 26ab — ab) K1 3 4 D4 9 विमुक्तधर्मा, D6 निर्मुक्त°; Cv (gloss संसारमलराहित्याख्यधर्मवान्) विशुद्ध° (as in text) D4 9 बुद्धेन शुद्धेन (by transp), G1 शुक्लेन शुद्धेन B8 (marg. as in text) सत्त्वेन (for शुद्धेन) B3 M6-7 स च (by transp), D4 9 सह — c) K7 B0 Da1 D8 D5 M1 7 युक्तेन, B8 तत्त्वेन; G8 सत्येन (for मुक्तेन). K1 3 4 D4 9 विबुद्ध(K4 °बुध; D4 9 °मुक्त)धर्मयुक्तेन — d) D7 T1 G1 3 समे(G1 भवे)त्य भरतर्षभ, G6 °त्य मिथिलाधिप

27 K1 4 D4 5 9 G3 read 27ab twice — a) K1 4 D4, 9 (all four second time) विमुक्त; K6 7 V1 B0 6-9 Da3 a4 Dn1 n4 D8 D2 3 4 (first time) 5 (second time) 7 8 9 (first time) T G1 3 (second time) 3 6 M1 6-7 Cs वियोग, D5 (first time) विमुक्त; G3 (first time) वियुक्त- (for नियोग) K1 (both times) 7 D4 (both times) 7 9 (both times) T G1 6 धर्मणा; D5 (first time) धर्मणा, D5 (second time) धर्मगश् (for धर्मिणा) D4 (first time) वैव (for चैव). ❀ Cs वियोगधर्मिणा, अभिहोत्रादौ कर्मणि । ❀ — b) K1 4 (both second time) 6 7 B0 7-9 Da3 a4 Dn1 n4 D8 D2 3 4 (second time) 5 (both times) 8 9 (second time) विमुक्तात्मा; V1 D7 T G1 3 (second time) 3 6 M1 6-7 वियोगात्मा; B3 G3 (first time) वियुक्तात्मा (for नियोगात्मा) K6 7 B0 6 7 8 (marg as in text). 9 Da3 a4 Dn1 n4 D8 D2 3 4 (second time) 5 (first time) 8 9 (second time) G3 (first time) अथ (for अपि). — c) K1 3 4 विमोक्ष(K4 °क्षि)णाद्; K7 D4 9 °क्षेण; Da4 °क्षिण्य (for °क्षिणा) D7 T G1, 3, 6 विमोक्षी (for °क्षश्) — d) K1 3 4 7 वै, D7 G1 [अ]ह (for [इ]ह). V1 भवत्यपि; D4 9 तदा भवेत्.

28 a) Da4 शुद्धिकर्मा, D7 T2 G1 शुचिकर्मणा; G3 M8 6 शुचिधर्मि(M6 °र्मे)णा, M1 7 शुचिर्धर्मा (for शुचिकर्मा) K7 शुचिश्च शुचिकर्मेण, D4, 9 शुचिकर्मणा शुचिश्च — b) Dn1 दीप्तिकान् (for °मान्) — c) M1 6-7 भवत्येष (for च भवति)

29 a) D7 T G1 3 6 तथा चैष; M1 6-7 भवत्येष. — b) ❀ Cs केवलेन, जीवन्मुक्तेनाचार्येण । ❀ — c) K1 3 4 स्वतंत्र वा (for °त्रश्च) B0 स्वतंत्रेण स्वतंत्रश्च; D7 G1 स्वधर्मेण स्वतंत्रश्च — d) K1 3 4 7 V1 B3 9 D6 अवाप्नुयात्; T1 G6 तथाप्नुते, T2 G3 उपाप्नुते (for अवाप्नुते) D7 G1 स्वतन्त्रं त (D7 om तं) तत्राप्नुते; G3 °त्र समुपाश्नुते

30 a) K7 om. मया ते — b) K7 पथ्य; D7 T1 G1 3 6 तत्त्व (for तथ्य) G1 यदार्थं (for यथार्थं). — c) K7 D4 6 9 अमत्सरीत्व (for °रत्व). K6 7 V1 B0 6-9 Da3 a4 Dn1, n4 D8 D2 3, 5 8 G3 परिगृह्य (for प्रति°) D4 वार्यं (for चार्यं) ❀ Cs अमत्सरत्वं प्रतिगृह्य, शमदमादिसाधनं स्वीकृत्य । ❀ — d) D9 ब्रह्माणि (for ब्रह्म वि). K1 विशुद्धमात्मं; K6 °भावं; M1, 7

अमत्सरत्वं प्रतिगृह्य चार्थं
सनातनं ब्रह्म विशुद्धमाद्यम् ॥ ३०
न वेदनिष्ठस्य जनस्य राज-
न्प्रदेयमेतत्परमं त्वया भवेत् ।
विवित्समानाय विबोधकारकं
प्रबोधहेतोः प्रणतस्य शासनम् ॥ ३१
न देयमेतच्च तथानृतात्मने
शठाय क्लीबाय न जिह्मबुद्धये ।
न पण्डितज्ञानपरोपतापिने
देयं त्वयेदं विनिबोध यादृशे ॥ ३२

श्रद्धान्विततायाथ गुणान्विताय
परापवादाद्विरताय नित्यम् ।
विशुद्धयोगाय बुधाय चैव
क्रियावतेऽथ क्षमिणे हिताय ॥ ३३
विविक्तशीलाय विधिप्रियाय
विवादहीनाय बहुश्रुताय ।
विजानते चैव न चाहितक्षमे
दमे च शक्ताय शमे च देहिनाम् ॥ ३४
एतैर्गुणैर्हीनतमे न देय-
मेतत्परं ब्रह्म विशुद्धमाहुः ।

C 12. 11502
B 12. 205(8) 36
K 12. 313 36

---

ᵒमान्यं (for ᵒमाद्यम्). K7 सनातन ब्रह्मणिमाद्यशुद्ध (sic).

31 ᵃ) K1 2 4 न चाप्यनि( K2 ᵒन )ष्ठस्य, B0 6 9 D32 D7 T G3 6 M1 6–7 Cnp Cp Kumbh ed. नावेदनि( M7 ᵒवि )ष्ठस्य, G1 न देव ; G2 न चेदनिष्ठस्य (for न वेदनिष्ठस्य) K1 2 4 नरस्य (for जनस्य) ❀ Cn वेदनिष्ठस्य निदाघवत्कर्मश्रद्धाजडस्य नावेदनिष्ठस्येति पाठः स्वच्छ ॥ Cs वेदनिष्ठस्य, कर्मभागार्थपरस्य स्वर्गादिकामिनः । ❀ — ᵇ) D7 परेयम्; G1 वरेयम् (for प्रदेयम्). — ᶜ) K2 Da1 M1 वित्रसमानाय; K6 V1 B1 8 (marg ) 9 Da2 Dn1 n4 Ds D2 6 8 विधित्सᵒ; D7 G1 विबुद्धमानस्य; T G3.6 विवित्समानस्य, G2 विबुध्यमानाय; Cn (gloss विशेषेण तृष्णावते । भेदृपाने इत्यस्य रूपम्) विवित्सᵒ (as in text) K6 V1 B8 Da2 Dn1 n4 Ds D2 8. 8 वि( K6 V1 B8 Ds2 नि )योधकारणं; B0 निबोधकारक, Da1 विरोधᵒ, D7 G1 विबुद्धिᵒ (G1 ᵒद्ध ) ( for विबोध ) — ᵈ) B6 (marg as in text) साधनं; Ds1 शाश्वत; G1 नाश (for शासनम्).

32 ᵃ) K6 7 यथा, Da3. a1 त्वया (for तथा) K1 3.4 D1 6 9 [अ]कृतात्मने; Da2 a1 [अ]घृताᵒ (for [अ]नृताᵒ) — ᵇ) K1 शाठाय; M6 तथा च (for शठाय). K1 D4 9 क्लीवाय D7 द्वि ; G2 नि- (for न) — ᶜ) K2 पदिताज्ञान (for पण्डितᵒ) D7 G1 परावतापिने (for परोपᵒ) — ᵈ) D7 lacuna, G2 ज्ञेयं (for देयं) K2 D2 त्वदेयं, K4 V1 B0 6 7 9 Dn1 n4 Ds D3 8 तु देय, K6 च देय (for त्वयेदं) K4. 6 Dn1. n4 Ds D2 3 8 च; T2 च वि (for वि ) D6 यादृशि (for ᵒशे ) D9 विनिमोधमीदृशे D4 देय त्वदेयं विनिबोधस्य दृशे

33 ᵃ) Ds1 श्रद्धान्विततायार्य-; Ds2 ᵒतार्याय; D8 शुद्धान्वितायाथ; G1 श्रद्धान्वतायाथ (for श्रद्धान्विᵒ) — ᵇ) Da3 Dn4 हि (for वि-). D6 परापचादापरताय नित्य — ᶜ) K1. 3 7 V1 D9 विशुद्धचित्ता( K2 ᵒचिंता ) य, D4 ᵒवित्ताय; G2 M6 6 ᵒयोनाय; Cs (gloss यमनियमादिगुणवते ) ᵒयोगाय (as in text) K2 बुद्धाय, D4 lacuna (for बुधाय) K4 B0 Da3 Dn1 n4 Ds D2 8 8 नित्य; D4 वैव (for चैव) — ᵈ) D9 om क्रियाव K4 B0 Da3 a1 Ds D2 8 8 च (for ऽथ) K7 क्षमिनो; B7 क्षमणे (for क्षमिणे) G1 क्रियावते तक्षमिते यथाय (sic) ❀ Cs क्रियावते, ईश्वरार्पणबुद्ध्या स्वकर्मनिरताय । ❀

34 ᵃ) G3 विमुक्त- (for विविक्त-) — ᵇ) Da1 विषाद (for विवाद ) K1. 2 4 व्रताय (for श्रुताय). — ᶜ) G3 M1. 6–7 द्विजातये (for विजानते) K6 या (for च) K1. 2 न चाहिताय; K7 D4 5 9 G6 M6 तथा हितक्षमे, D7 (also as in text) न तत्क्षमा दमा; T G1 3 त( T1 य )था हितक्षमा; G2 दमक्षमान्विते (for न चाहितक्षमे) — ᵈ) K7 D4 9 सत्येरमसमे; B0 7 श( B7 स )क्ते त्वसमे; B6 9 Da3 a1 M1 6–7 सक्तेत्मसमे; B8 शक्तेय समे; D8 शक्ते तु शमे; D6 सत्ये च शमे (for शक्ताय शमे). K4 V1 समाय; K6 समेव (for शमे च) K6 B0 6–9 Da3 a1 Dn1 n4 Ds D2 8 8 देय (for देहिनाम्) K1 शमे च प्रसक्ताय समाय देहिनां, K2 समे च सक्ताय समाय देहिनां; D7 T G1 3 6 दमाय नित्यात्मसमाय देहिनां; G2 शक्ताय चैकात्मसमता न देहिना

35 ᵃ) B0 एतद् ; G2 एकैर् (for एतैर्). D7 G1 गेहतमे (for हीनᵒ). — ᶜ) B8 श्रेयसे (for ᵒमा ) K7 Da1 योक्षति B8 D6 तादृशं कृत; D7 T1 G1 3 6 तादृगेत (for तादृशी कृतं). K1. 2 न श्रेयसे (K1 ᵒसे )

C. 12 11502 B 12. 309[o] 36 K. 12. 313 36 न श्रेयसा योक्ष्यति तादृशे कृतं
धर्मप्रवक्तारमपात्रदानात् ॥ ३५
पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्नदेयं त्विदमव्रताय ।
जितेन्द्रियायैतदसंशयं ते
भवेत्प्रदेयं परमं नरेन्द्र ॥ ३६
कराल मा ते भयमस्तु किंचि-
देतच्छ्रुतं ब्रह्म परं त्वयाद्य ।
यथावदुक्तं परमं पवित्रं
निःशोकमत्यन्तमनादिमध्यम् ॥ ३७
अगाधजन्मामरणं च राज-
न्निरामयं वीतभयं शिवं च ।
समीक्ष्य मोहं त्यज चाद्य सर्वं
ज्ञानस्य तत्त्वार्थमिदं विदित्वा ॥ ३८
अवाप्तमेतद्धि पुरा सनातना-
द्धिरण्यगर्भाद्गदतो नराधिप ।
प्रसाद्य यत्नेन तमुग्रतेजसं
सनातनं ब्रह्म यथाद्य वै त्वया ॥ ३९
पृष्टस्त्वया चास्मि यथा नरेन्द्र
तथा मयेदं त्वयि चोक्तमद्य ।
तथावाप्तं ब्रह्मणो मे नरेन्द्र
महज्ज्ञानं मोक्षविदां पुराणम् ॥ ४०

---

मोक्ष( K1 योक्ष )ति तद्वशे कृत — d) Da3 धर्मे; D5 धर्मे (for धर्मं). G1 प्रवर्तारम् (for °क्तारम्). K1 धर्मप्रवक्तारसपात्रदानात्

36 V1 reads 36 on marg — a) G1 पृथिवीम्. D7 G1 अपि (for यद्यपि) K7 रत्नपूर्णा; Da4 °पूर्णं (for °पूर्णां). — b) K2 तद्यान्; G2 यद्यान् (for दद्यान्). Da4 om न K6 B7 अदेयं (for नदेयं) K1. 2 इदम्, Da4 प्रियम् (for त्विदम्). — Da4 om 36c–37b — c) D4 5 यतेंद्रियाय (for जितेन्द्रि°). K6 [अ]ससय; B6 °शय च — d) Da3 न चेत् (for भवेत्) D7 G1 भगवन् (for परमं) Ds1 नरेंद्र.

37 Da4 om. 37ab (cf. v. l. 36). — a) D4 काराळ; T G2 3. 6 कराळ Dn1 D7 मास्ते (for मा ते). K3 भयसंस्तु, D7 T G2 M1. 5–7 °मस्ति (for °मस्तु). B9 om from मस्तु up to तेजसं (in 39c) — b) K1 2 4 D7 T G1 3 6 transp श्रुत and परं. K7 D9 त्वयानघ (for त्वयाद्य) — c) D7 T1 G1 त( T1 य )था यदुक्त; G3 एतावदुक्तं (for यथा°) — d) K6 B0. 6–8 Da3 a4 Dn1 n4 Ds D2 3 7 T G1–3 6 M1 5–7 विशोकम् (for निःशो°). K2 अनाद्यमध्यं; K7 Da3 a4 D4 9 °दिमन्यय (for °दिमध्यम्)

38 B9 om 38 (cf. v. l. 37) — a) T2 G1 अगाढ-; G2 अमाय (for अगाध) ꕥ Cn अगाधजन्म, अगाधं अप्रतिष्ठित जन्म येन, जन्मनिवर्तकम् ॥ Cp नेद गाधमतिगम्भीर, अजन्म, मरणनिवर्तकम् । ꕥ — b) K4 निरामये (for °मयं) — c) Da3 समीक्ष D4 सर्वं (for मोहं). K1 2 4 सर्वेणाद्य (for चाद्य सर्वं). K6 7 B7 Da3 Dn1. n4 D2 3 7 8 T1 G1 3 6 चाद्य (for चाद्य) K6 Dn4 Ds1 D2 3 M1 5 6 सर्वे (for सर्वं) — d) M7 मत्वार्थम् (for तत्त्वा°). K1. 2 4 7 B0 7 D4. 5 9 T2 G2 इमं (for इदं).

39 B9 om. up to तेजसं (cf v. l. 37). — a) K4. 6 V1 B0 7. 8 Da3. a4 Dn1 n4 Ds D2 3 8 मया (for पुरा). — b) K1 2 4 हिरण्यगर्भाप्रजतो; D7 T G1. 3 6 M1. 5–7 °र्भाद्यजतो; G2 °र्भाद्भुवतो (for °र्भाद्गदतो) Dn4 जनाधिप (for नरा°). — c) K6 आसाद्य (for प्र°). B6 (marg as in text) धर्मेण, T1 G1 3 6 यज्ञेन (for यत्नेन) D7 तमद्य; G1 समुद्य (for तमुग्र-). B0 Da3 Dn1. n4 Ds D2 3. 8 -चेतस (for -तेजसं). — d) B3 (marg) यथा हि; D7 G1 स नाथ (for यथाद्य) Da3 a4 पुरा (for त्वया).

40 Da4 repeats 40a after 40b — a) K1 2 4 दृष्टस् (for पृष्टस्) K1. 2 4 V1 ह्यस्मि; K6 चाद्य; K7 D4 9 [अ]द्यास्मि (for चास्मि). D7 T G1–3 6 M1. 5–7 पृष्टो (D7 G1 दृष्टो) यथा ह्यस्मि (G3 °थास्म्यद्य) त्वया नरेंद्र — b) K6 V1 B0 6–9 Da3 a4 Dn1. n4 Ds D2. 3 8 G2 यथा (for तथा) K1 2 4 मयोक्तं (for मयेद). T G1 3 6 M1. 5–7 तव (for त्वयि) K1. 2 4 चेदमद्य; D7 चोत्तमाद्य (for चोक्त°). K7 अद्य वै (for अद्य) — Da4 om. 40c — c) K6 तथावाप्त, K7 D4. 7. 9 T G1 3 6 यथावाप्तं; B0 तथा चाप्त; B8 तथा ह्यवाप्त; Dn4 D8 तथा वाप्त; Ds1 तथावाप्ते; M1 5–7 यथा त्ववाप्त (for तथावाप्त) K6 G6 ब्राह्मणो (for ब्र°). — d) K1. 2 4 6 B0 Da3, a4 Dn1 n4 Ds D2–4. 8 9 T2 G2

भीष्म उवाच ।

एतदुक्तं परं ब्रह्म यस्मान्नावर्तते पुनः ।
पञ्चविंशो महाराज परमर्षिनिदर्शनात् ॥ ४१
पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च ।
नावबुध्यति तत्त्वेन बुध्यमानोऽजरामरः ॥ ४२
एतन्निःश्रेयसकरं ज्ञानानां ते परं मया ।
कथितं तत्त्वतस्तात श्रुत्वा देवर्षितो नृप ॥ ४३
हिरण्यगर्भादृषिणा वसिष्ठेन महात्मना ।
वसिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदम् ॥ ४४
नारदाद्विदितं मह्यमेतद्ब्रह्म सनातनम् ।
मा शुचः कौरवेन्द्र त्वं श्रुत्वैतत्परमं पदम् ॥ ४५
येन क्षराक्षरे वित्ते न भयं तस्य विद्यते ।
विद्यते तु भयं तस्य यो नैतद्वेत्ति पार्थिव ॥ ४६
अविज्ञानाच्च मूढात्मा पुनः पुनरुपद्रवन् ।
प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते ॥ ४७
देवलोकं तथा तिर्यङ्मानुष्यमपि चाश्नुते ।
यदि शुध्यति कालेन तस्मादज्ञानसागरात् ॥ ४८
अज्ञानसागरो घोरो ह्यव्यक्तोऽगाध उच्यते । C 12. 11316 B 12. 309(8). 50 K 12. 313. 50

महा- ; D7 G1 महं (for महज्) D5 गीत (for ज्ञान). K3 मोक्षविद ; K7 D4 9 तत्त्वविदां ; B9 ब्रह्म° ; D5 मोक्षमिद ; G2 मोक्षचिंतां (for °विदां) K6 7 V1 B0 6-9 Da3 a4 Dn1 n4 D2-5 8 9 परायणम् ; G3 तथैव (for पुराणम्).

41 ᵃ) K2 यदुक्तं परम ब्रह्म —ᶜ) K1. 2 V1 Da3 पंचविंशं ; D4 °विंशा ; G1 °विंशे (for °विंशो). —ᵈ) B9 परमात्म ; D4 9 परमर्षेर् (for °मर्षि ) G3 निवेशनात् (for निदर्शनात्)

42 ᵃ) K6 7 B9 Da3 a4 D4 5 8 9 नावृत्तिम् (for °वा°) —ᵇ) K6 V1 B6-9 Da4 D5 7 T G1-3 6 तु (for च) —ᶜ) D8 (before corr) T1 न वा ; T2 न यो ; M1 6-7 न चेद् (for नाव) —ᵈ) K6 V1 B0 6-9 Da3 a4 Dn1 n4 D8 D2 3 5 7 T1 G1 2. 6 [s]जरामर (for °मर)

43 ᵃ) Some MSS निश्रेयसकर —ᵇ) K6 V1 B0 6-9 Da3 a4 Dn1 n4 D8 D2 3 5 7 8 T G1 3 6 ज्ञान ते परमं मया (G1 पद) — K2 om 43ᶜᵈ G1 om (hapl) 43ᶜ-45ᵈ. —ᶜ) D5 तत्ते (for तात) —ᵈ) K6 श्रुता (for श्रुत्वा).

44 G1 om. 44 (cf v l. 43). —ᵇ) K6. 7 V1 B9 D4 T2 वशिष्ठेन K6 महर्षिणा (for महात्मना). —ᶜ) K6. 7 V1 B9 D4 T2 वशिष्ठाद्. K6 7 B6 Da3 a4 D4 5 9 -शार्दूलो (for शार्दूलान्) —ᵈ) K2 नारदे (for °दो) K7 व्याप्तवान् (for ऽवाप्त°).

45 G1 om 45 (cf v l 43) —ᵃ) K2 विधितं (for विदितं) M1 6-7 श्वेतन् (M7 °तं) (for मह्यम्) —ᵇ) M1, 6-7 मया (for एतद्) Da3 a4 निदर्शनं (for सनातनम्). —ᶜ) K2 शुचा (for शुच) —ᵈ) K7 D4 5 9 श्रुत्वा तत् ; B6 (marg as in text) 7 Da3 a4 तदेतत् ; D7 G3 6 श्रुत्वेद ; T1 श्रुत्वैत (for °तत्).

46 ᵃ) Da3 a4 तेन (for येन) K2 6 Ds1 D4 [अ]क्षराक्षरे (Ds1 °रा) ; Da4 क्षराक्षर (for °क्षरे) K1 2 4 7 V1 D4 9 भित्ते ; B6-9 वित्ते, Da4 विंदे ; Ds1 वेत्ति ; D5 मित्रो ; T1 विंदेद् ; G1 वृत्ते ; G2 ज्ञाते ; G6 विंदेन् ; Cn (gloss विज्ञाते) वित्ते (as in text) —ᵇ) B0 Dn1 n4 D8 D2 3 5 8 भय तस्य न विद्यते —ᶜ) K1. 2 4 न वि(K4 भि)द्यते, Da4 विद्यते तु —ᵈ) K7 D4 5 7 9 G2 तद् (for [ए]तद्) K1. 2 4 यो नो (K2 ये नो ; K4 ये न) विद्येत पार्थिव

47 ᵃ) T1 G1 6 अनु(G1 न)ज्ञानाद् (for अविज्ञानाच्) D5 7 स, T G1. 3 6 वि- (for च) K4 विमूढात्मा (hypermetric), K7 मोहाच्च ; D4 9 मोहात्मा (for मूढात्मा) —ᵇ) K2 4 उपद्रुवं ; K6 V1 B0 Da3 a4 Dn1. n4 D8 D2 3 5 7 T2 G1-3 Cn (gloss क्लेशवानभूत) उपाद्रव(Da4 °वा)त् ; B6-9 T1 G6 M1. 6-7 उपद्रवान् ; D8 उपाद्रवेत् (for उपद्रवन्) —ᶜ) B7 lacuna, D5 प्रेत (for प्रेत्य) —ᵈ) K7 मरणतानि, G1. 6 °णाद्यानि ; G2 °त्यानि (for °न्तानि)

48 Da3 a4 Ds1 om. (hapl.) 48ᵃᵇ —ᵃ) D5 7 देवलोके (for °लोक) K7 तीर्यङ्, D5 7 राजस. —ᵇ) K2 4 B8 Dn1 n4 D2 3 G1. 2 M6 मनुष्यम् (for मा°). G2 सोश्नुते (for चा°) D5 7 तिर्यङ्मानुष्यमश्नुते —ᶜ) T G1 3 6 शुध्यते यदि कालेन — After 48, T G3 6 Kumbh ed ins

761* उत्तीर्णोऽस्मादगाधात्स परमाप्नोति शोभनम् ।

49 ᵃ) D4 घोरा (for घोरो) —ᵇ) D4 उद्यते (for उच्यते).

C. 12. 11517
B 12. 309(8) 50
K. 12. 313 50

अहन्यहनि मज्जन्ति यत्र भूतानि भारत ॥ ४९
यस्मादगाधादव्यक्तादुत्तीर्णस्त्वं सनातनात् ।
तस्मात्त्वं विरजाश्चैव वितमस्कश्च पार्थिव ॥ ५०

इति श्रीमहाभारते शान्तिपर्वणि षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

## २९७

भीष्म उवाच ।
मृगयां विचरन्कश्चिद्विजने जनकात्मजः ।
वने ददर्श विप्रेन्द्रमृषिं वंशधरं भृगोः ॥ १
तमासीनमुपासीनः प्रणम्य शिरसा मुनिम् ।
पश्चादनुमतस्तेन पप्रच्छ वसुमानिदम् ॥ २
भगवन्किमिदं श्रेयः प्रेत्य वापीह वा भवेत् ।
पुरुषस्याध्रुवे देहे कामस्य वशवर्तिनः ॥ ३
सत्कृत्य परिपृष्टः सन्सुमहात्मा महातपाः ।
निजगाद ततस्तस्मै श्रेयस्करमिदं वचः ॥ ४
मनसोऽप्रतिकूलानि प्रेत्य चेह च वाञ्छसि ।

---

50 a) K1 2 Bo D4 9 G2 M7 तस्माद् (for य°). — b) D7 G1 उत्तीर्णास् (for °र्णस्) K1 7 D4, 9 सना-तन (for °तनात्) — c) K1 3 4 विरजस्कश्च; K7 °जश्चैव (for विरजा°) — d) B6 7 Da3 a4 G6 भारत; D9 पार्थिव V1 G1 वीतमन्यु( G1 वीतमस्क )श्च पार्थिव; D5 वितमा भव पार्थिव.

Colophon. Ś1 D6 missing K3 5 B1-5 Da1 a2 Dn2 n3 D1 G4 5 M2-4 absent — *Sub parvan* K1 4, 6 7 V1 Bo 6-9 Da3 a4 Dn1 n4 D8 D2-5 7-9 T G1-3 6 M1 5-7 मोक्षधर्म. — *Adhy name* K1 2 4 V1 B6-9 Da3 a4 Dn1 D5 8 M1 5-7 वसि( V1 B9 °शि )ष्ठकराल( M1 5-7 °ळ )जनकसंवाद ( K2 °दा ) समाप्त; K6 D8 D2 3 वसिष्ठकरालजनकसंवाद; K7 D4 9 साध्य फलनिर्णय वशि( D9 °सि )ष्ठकरालजनकसंवाद समाप्त; Bo करालजनकसंवाद; D7 T1 G6 वसिष्ठकराळ( D7 °ल )जनकसंवादे मोक्षस्वरूपं, G1 करालजनकवसिष्ठसंवादे मोक्षस्वरूप; G2 वसिष्ठकराळसंवाद समाप्त; M6 6 (also) वसिष्ठ करालजनकसंवादे गुणविधिकथन — *Adhy no* (figures, words or both) K6 33, Bo 8 135, B7 T1 G1, 6 131, Dn1 134, Dn4 133, Da2 G3 M5 132, D8 129, T2 144, G2 147, M1, 6, 7 130 — *Śloka no* Da4 Dn4 51, Dn1 50, D8 52

**297**

☞ This adhy. is missing in Ś1 D6 (cf v. l 12 274 13, 283 15).

1 M6 om. the ref. G1 वसिष्ठ (for भीष्म). — a) D4 corrupt K2 4 7 Da4 G2 मृगया. K7 B8 विहरन् (for विच°). D7 राजन् (for कश्चिद्). — d) K1 Dn4 G1 ऋषि-. B6 वंशव( marg °क )रं (for °धरं). C8 (gloss. शमविज्ञानादिभिः) गुणै (for भृगोः). K2 ऋषिवेशधरं भृगो.

2 a) K1 2 4 Bo Dn1 n4 D8 D2, 3 8 उपासीनम् (for तमा°) D5 T2 उपासीनं (for °सीनः). — b) K2 4 Bo मुनि — c) D7 G1 अनुगते (for °मतस्). — d) K7 पपृच्छ; D8 पप्रक्ष; G1 ह्यपृच्छद् (for पप्रच्छ) V1 G6 सुमहान् (for वसुमान्).

3 D7 G1 om 3-4. Before 3, B6 9 ins वसुमानुवाच. — a) K1 2 7 D4 8 9 G2 इव; D8 D5 T1 G3 6 M1, 5-7 C8 इह; T2 मह (for इदं) Da2 श्रेष्ठ; G2 श्रेय (for श्रेय). — b) K6 7 Bo 7 Dn1 Dn1 D4, 5 8 9 T M1 5-7 च (for वा). K4 भजेत्; Dn1 भवें (for भवेत्)

4 D7 G1 om 4 (of v l 3) Before 4, B8 9 ins भीष्म उवाच — a) Bo सत्कृत्य; T2 तत्कृत्य (for सत्कृत्य) K1 स; K2 4 स; K6 V1 B6-8 Da3 a4 G2 तु; K7 D4, 5 9 च; B9 lacuna (for सन्) — b) V1 B6-8 Da3 D5 T1 G3 6 स महात्मा (for सुम°) K1 7 महातप; D5 °त्मने (for °तपा°). — c) K7 D4 9 निर्जगाद (for निज°) — After 4, K1 2 4 ins an addl colophon [*Sub-parvan* K1 मोक्षधर्म].

5 Before 5, MSS ins. ऋषिरुवाच. — a) G1 चैव; G2 नेह (for चेह). D4 corrupt, D9 चेश्रेह

भूतानां प्रतिकूलेभ्यो निवर्तस्व यतेन्द्रियः ॥ ५
धर्मः सतां हितः पुंसां धर्मश्चैवाश्रयः सताम् ।
धर्माल्लोकास्त्रयस्तात प्रवृत्ताः सचराचराः ॥ ६
स्वादुकामुक कामानां वैतृष्ण्यं किं न गच्छसि ।
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ॥ ७
यथा ज्ञाने परिचयः कर्तव्यस्तत्फलार्थिना ।
तथा धर्मे परिचयः कर्तव्यस्तत्फलार्थिना ॥ ८
असता धर्मकामेन विशुद्धं कर्म दुष्करम् ।
सता तु धर्मकामेन सुकरं कर्म दुष्करम् ॥ ९
वने ग्राम्यसुखाचारो यथा ग्राम्यस्तथैव सः ।
ग्रामे वनसुखाचारो यथा वनचरस्तथा ॥ १०
मनोवाक्कर्मके धर्मे कुरु श्रद्धां समाहितः ।
निवृत्तौ वा प्रवृत्तौ वा संप्रधार्य गुणागुणान् ॥ ११
नित्यं च बहु दातव्यं साधुभ्यश्चानसूयता ।
प्रार्थितं व्रतशौचाभ्यां सत्कृतं देशकालयोः ॥ १२
शुभेन विधिना लब्धमर्हाय प्रतिपादयेत् ।
क्रोधमुत्सृज्य दत्त्वा च नानुतप्येन्न कीर्तयेत् ॥ १३
अनृशंसः शुचिर्दान्तः सत्यवागार्जवे स्थितः । C 12 11531 B 12 310(09).14 K 12.314 14

(for चेह च) T G1 3 6 M1 6-7 न (for the second च) Ds1 वाछति; T1 G1 3 6 Cs गच्छवि (for गच्छसि) ⁂ Cs भूताना प्रतिकूलानि वान्छन्स्त्वयमपि मनस प्रतिकूलानि गच्छसि । ⁂ —ᶜ) D5 प्रतिभूतेभ्यो (for °कूलेभ्यो) —ᵈ) K6 7 D4 5 9 जितेंद्रिय (for यतेन्द्रिय)

6 ᵃ) D7 T G1 3 6 M1 6-7 सदा (for सतां) D6 हित (for हित) —ᶜ) D3 धर्म (for धर्माल्ल्) B9 लोक; T2 लोकात् (for लोकास्) K4 त्रयात् (for त्रयस्) —ᵈ) T2 प्रशस्ता (for प्रवृत्ता) K1 D5 सचराचर°, B1 सचराश्चरा

7 ᵃ) G1 corrupt G6 स्वादु कारक (for स्वादुकामुक) —ᵇ) Da4 वैतृष्णं K1 D7 नु (for न) Da3 a4 पच्छसि, T2 M1 7 गच्छति; G1 पृच्छति (for गच्छसि) — V1 reads 7ᶜᵈ on marg —ᶜ) K2 मनु; K6 वनु; M1 7 मधु (for मधु) —ᵈ) K7 B8 (marg as in text) D4 5 7 9 नैव पश्यसि; T2 पानुप° (for नानुप°)

8 ᵃ) G1 परिचय D5 7 यथा संभोगसंस्थाने —ᵇ) B8 (marg as in text) ते फलार्थिना, T2 तत्फला क्रिया (for °र्थिना) — Ds1 D3 G2 om (hapl) 8ᶜᵈ —ᶜ) G1 सदा (for तथा) G1 om. from धर्मे up to फलार्थिना D9 धर्म (for धर्मे) —ᵈ) K1 3 4 कर्तव्यो भूतिमिच्छता; V1 °स्यभूतिमिच्छसि (sic)

9 ᵃ) Da3 a4 D5 7 असतां; T1 G1 3 6 न सदा, T2 नासता (for असता) K7 D4 9 [अ]नर्थकामेन (for धर्म°) —ᵇ) B9 दुष्कर; D5 7 G2 सुकर (for विशुद्ध) D5 7 धर्म- (for कर्म) G1 शुद्ध कर्म सुदुष्कर — K7 V1 B9 8 Dn4 D4 5 7, 9 T G1-3 6 om. (hapl) 9ᶜᵈ —ᶜ) K1 3 4 न सता; Da3 a4 सतां तु (for सता तु) —ᵈ) K1 2 4 Ds1 विशुद्ध (for सुकर).

10 ᵃ) G2 विना (for वने) K7 Da3 a4 D4 9 G1 Cs ग्राम्यसमाचारो, D7 °सुचारोधो (for °सुखाचारो). — G1 om (hapl) 10ᵇᶜ —ᵇ) Dn4 च (for स) —ᶜ) K7 D4 9 T2 वन(T2 °न्य)समाचारो, T1 G3 6 वन्यसुखा°; G2 सुखवना° (for वनसुखा°)

11 ᵃ) K1 3 4 मनोवाक्कर्मक; K6 7 V1 B0 6 (marg) 8 Da4 Dn1 n4 D8 D2 3 5 7 8 °कायिके; D9 °कायके, T1 G1 3 6 °कर्मगे, T2 °जे (for °के) K1 2 धर्म (for धर्मे) —ᵇ) Dn4 क्रतु (for कुरु) K1 3 4 श्रेष्ठ, Dn4 M5 श्रद्धा; M1 7 श्रद्ध; M6 शुद्ध (for श्रद्धां) —ᶜ) M1 6-7 निवृत्तो (for °त्तौ) Da4 ह वृत्तो, D4 M1 6-7 प्रवृत्तो (for °त्तौ) Dn4 प्रवृत्तौ वा निवृत्तौ वा (by transp) —ᵈ) Ds2 गुणान्गुणान्; T G1 3 6 गुणागुण

12 ᵃ) K2 4 बहु च (by transp) —ᵇ) K1 3 4 साधूना (for साधुभ्यश्च्) K2 [अ]नसूयतां; K7 B1 D4 9 °यया, Ds1 D5 7 G1 [अ]नसुयता —ᶜ) K4 D7 पार्थिवं; D4 प्रार्थिन; G1 प्राथ्र्य त (for प्रार्थित) D5, 7 यम शौचाभ्यां, T G1 3 6 M1 6-7 ब्राह्मणेभ्यश्च (for व्रत शौचाभ्या) —ᵈ) K2 मत्कृते (for सत्कृत)

13 ᵃ) K7 G1 सुखेन (for शुभेन) K1 3 4 कर्मणा (for विधिना) —ᵇ) B6 (marg as in text) 9 अर्हार्य (for अर्हाय) D7 प्रतिसाद्येत् (for °पादयेत्) G1 अर्हायाप्रतिपाधसे (sic) — K2 4 om. (hapl) 13ᶜᵈ. —ᶜ) V1 B9 Da3 D4 9 G2 उच्छिद्य; D5 7 सछिद्य (for उत्सृज्य) K6 V1 B0 6-9 Da3 a4 Dn1 n4 D8 D2 3 8 दद्याच् (for दत्त्वा). G1 [अ]थ; G3 [अ]थ

C. 12. 11031 B. 12. 310(09). 14 K 12. 314 14 योनिकर्मविशुद्धश्च पात्रं स्याद्वेदविद्द्विजः ॥ १४
सत्कृता चैकपत्नी च जात्या योनिरिहेष्यते ।
ऋग्यजुःसामगो विद्वान्षट्कर्मा पात्रमुच्यते ॥ १५
स एव धर्मः सोऽधर्मस्तं तं प्रतिनरं भवेत् ।
पात्रकर्मविशेषेण देशकालाववेक्ष्य च ॥ १६
लीलयाल्पं यथा गात्रात्प्रमृज्याद्रजसः पुमान् ।
बहुयत्नेन महता पापनिर्हरणं तथा ॥ १७
विरिक्तस्य यथा सम्यग्घृतं भवति भेषजम् ।
तथा निर्हृतदोषस्य प्रेत्यधर्मः सुखावहः ॥ १८
मानसं सर्वभूतेषु वर्तते वै शुभाशुभे ।
अशुभेभ्यः समाक्षिप्य शुभेष्वेवावतारयेत् ॥ १९
सर्वं सर्वेण सर्वत्र क्रियमाणं च पूजय ।

---

(for च). —$^{d}$) K7 न तु तप्येत्; Da4 नानुतप्यन्, D4 9 ननु तप्येन् (for नानुत°). D5 7 नानुतप्योनुकीर्तयेत्

14 $^{a}$) K6 अनृसंश°; D8 °शंज्ञ (for °शंस°). K1 2.4 शुभो (for शुचिर्) —$^{b}$) K7 आर्जव- (for आर्जवे) T G1 3 6 M1 5-7 रत° (for स्थित°). —$^{c}$) K1 2 जाति (for योनि). K3 -विशुद्धाश्च; T1 G6 विशुद्धं (for विशुद्धश्च)

15 $^{a}$) K1 2.4 सत्कृतश्च, B1 D5 7 सकृता; T G1-3 6 संस्कृता (for सत्कृता). D5 7 वा (for च). K1.3 4 V1 Ca चैक(K3 °व)पत्नीक°; K6 B0 6 8 (marg) एव (B8 तात) पत्नी च Cp (Cpp as in text) सत्यस्य चैकपत्नीको —$^{b}$) K1 2 4 सत्य; V1 सत्या; D5 7 न्याय्या, M1 5-7 जात्यां (for जात्या). K7 D4 5 7.9 उच्यते (for इष्यते) —$^{d}$) D5 7 तद्धर्माद्; Cs (gloss: अध्ययनादियुक्त) षट्कर्मा (as in text).

16 B0 om 16$^{a}$-17$^{b}$ B6 reads 16$^{ab}$ twice —$^{a}$) K3 धर्मा; B6 (second time) 9 D5 7 मक्षा (for धर्मं) B6 (second time) 9 [अ]सौ धर्मस्, D5 7 [अ]धर्मस्त्र (for सोऽधर्मस्). —$^{b}$) D5 7 corrupt K7 तं च (hypermetric), G3 न (for the second तं), K1 2 4 प्रतिदिनं; V1 °मरो (for °नर). K3 भजेत्; K6 व्रजेत् (for भवेत्) B6 (first time) तत्त्वं प्रतिपद्य च वै; B6 (second time) तं मातश्च नर भजेत्; B7 9 Da4 तन्मतिश्च नर त्य(B9 भ; Da4 व्र)जेत् —$^{c}$) K1 2 4 वाक्य (for पात्र-). —$^{d}$) K7 D4 9 देशं कालम्; D5 7 देशकालम् (for °कालाव्). T1 G3 6 अपेक्ष्य (for अवेक्ष्य)

17 B0 om. 17$^{ab}$ (cf v. l. 16) —$^{a}$) D7 लीलयाम्यां (for °याल्प) Da1 गोत्राद्; M1 5-7 गात्र (for गात्राद्) —$^{b}$) T1 G3 6 समृज्याद्, G1 सांरा° (sic), G3 प्रसृज्य (for प्रमृज्याद्) B9 वै रज°; Da3 Dn1 n4 D8 D3 8 8 तु रज; G1 रजस; M1 6 7 राजस (for रजस) K7 D4.5.7.9 प्रमृज्यादात्मनो रज.. —$^{c}$) Da3 Dn1. n4 D8 च महत् (for महता) —$^{d}$) K7 D4 9 पापनिर्हरणं; G1 पवित्रनिर्हरणं (for पापनि°). Da1 यथा (for तथा).

18 $^{a}$) K3 विस्तरस्य; K6 B5.7 9 Da3 a4 Cal ed. विविक्तस्य; K7 Dn4 D3 4 7 9 T G1 3 6 M1.5-7 Cv (gloss: अतो रागरहितस्य) विर°; G3 विशु° (for विरि°). K3 तथा; B8 घृतं (for यथा). ❀ Cn विरेचनानन्तरमेव घृतपानं भेषजम् । ❀ —$^{b}$) K6 7 B0 6 D4 9 T1 G1-3 6 M1 5-7 हितं; B5 यथा; Dn4 D8 D3.8 ध्रुविर्; D8 धृस्तिर्, T2 चित्त (for घृत) —$^{c}$) K7 D4 7 G1 3 निहृत; B9 निकृत (for निर्हृत-) K1 2 -पापस्य (for दोषस्य). —$^{d}$) Da4 Da1 प्रेत्यधर्मे-; D7 °धर्मा°. D4 7 सुखावहा; G3 °वह (for °वह°).

19 $^{a}$) B0 D5.7 मानस; B6-9 Da3. a4 G3 मनस° (for मानस). K1 2 सर्वभूतानां (for °तेषु). —$^{b}$) B7-9 Da4 वर्ततो वै; G1 वर्ततेषु (for °ते वै). K7 D4 5 7 9 च (for वै). K6 Da4 Dn1. n4 D5 7 T2 G1 शुभाशुभं. —D7 om 19$^{c}$-20$^{b}$. —$^{c}$) K4 6 V1 B0 6 7.9 Da3 a4 Dn1 n4 D8 D3 3 4 8 सदाक्षिप्य (for समा°) —$^{d}$) K1 2 M1 5 (before corr as in text). 6 7 [अ]वतारय; K7 D4 9 °धारयेत्, T G1-3 6 °धारय (for °तारयेत्). —After 19, K7 D4 9 ins .

762* मानसं वृद्धसेवाभिर्दुःखं शारीरमौषधैः ।
वाचिक मन्त्रजाप्येन विद्वान्यत्नाद्विनाशयेत् ।

20 K7 D7 om 20$^{ab}$ (for D7, cf v l. 19). —$^{a}$) G1 om. (hapl) सर्वं. T G2.6 सर्वेण सर्वं (by transp) M1. 5-7 सर्वत्र सर्वेण (by transp) Da4 धर्मेण (for सर्वत्र) —$^{b}$) K6 ह्रियमाण च; Da3 a4 क्रियमाणश्च (Da4 °स्य); D4 5 9 °णं तु (D5 तु) (for °णं च). T G1.3 6 प्रपूजय (G1 °य) (for च पूजय). K6 V1 B0 6-9 Da3 a4 Dn1 n4 D8 D3-5 8 9 पूजयेत् (for पूजय). —$^{c}$) Da4 अधर्मे (for स्वधर्मे) B6-9 Da4 यत्र; D5 7 यत्र (for यत्र) —$^{d}$) Da4 Da3 काम°; D6.7 काले (for कामं). K3 6 V1 B0 6-9 Dn1. n4 D8

स्वधर्मे यत्र रागस्ते कामं धर्मो विधीयताम् ॥ २०
अधृतात्मन्धृतौ तिष्ठ दुर्बुद्धे बुद्धिमान्भव ।
अप्रशान्त प्रशाम्य त्वमप्राज्ञ प्राज्ञवच्चर ॥ २१
तेजसा शक्यते प्राप्तुमुपायसहचारिणा ।
इह च प्रेत्य च श्रेयस्तस्य मूलं धृतिः परा ॥ २२
राजर्षिरधृतिः स्वर्गात्पतितो हि महाभिषः ।
ययातिः क्षीणपुण्यश्च धृत्या लोकानवाप्तवान् ॥ २३
तपस्विनां धर्मवतां विदुषां चोपसेवनात् ।
प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोऽभिपत्स्यसे ॥ २४
स तु स्वभावसंपन्नस्तच्छ्रुत्वा मुनिभाषितम् ।
विनिवर्त्य मनः कामाद्धर्मे बुद्धिं चकार ह ॥ २५ C. 12 11542 B 12. 310(09).25 K 12 314 25

इति श्रीमहाभारते शान्तिपर्वणि सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

---

D2 3 5 7 8 G6 धर्मे; Da3 a4 D4 धर्मं (for धर्मो) K6 V1 B0 (marg as in text) 7 8 D8 स धीयतां, Da3 सया°, Da4 सही, Ds1 D4 विधीय त (sic), G2 M1, 6–7 स धीमतां (for विधीयताम्)

21 a) K1 अरतात्मा, K2 आदत्तात्मा; K4 आघृतात्मा; K7 D9 अकृतात्मन्, D4 आकृतात्मन्, D6, 7 अधर्मात्मन्, G2 अधृतात्मा (for °त्मन्) K2 रतौ, K7 D4 कृतस्; D9 कृतौ (for धृतौ) Dn4 तिष्ठन्, G3 तिष्ठेद् (for तिष्ठ) — c) K4 6 7 V1 B0 6 Da3 Dn1 n4 D8 D–5 8 9 T G1–3 6 अप्रशांत° B6 M1 6–7 प्रशाम्यस्व; B7 °म्यत, B8 °म्ये त्वम्, D7 प्रशांत त्वम् (for प्रशाम्य त्वम्) — d) K4 V1 B0 7 9 Da3 a4 Dn1 n4 D8 D2–5 7–9 T G1–3 6 M1 6 7 अप्राज्ञ° (for °ज्ञ) D6 प्राज्ञवान् (for °वच्) K6 चर°, K7 D4 9 भव (for चर)

22 a) T G1 6 M1 6–7 ओजसा (for तेजसा) D6 7 सायम् (for प्राप्तुम्) — b) K3 4 6 V1 B0 6–9 Da3 a4 Dn1 n4 D8 D2 3 5 7 8 T1 G2 3 6 उपाय (for उपाय-) V1 Ds1 D8 सहचारिण (V1 °णा), D6 7 सहधारिणा (for -सहचारिणा) — c) M1 6–7 चै (for the second च) — d) K2 G2 3 पुरा (for परा)

23 For Mahābhiṣa, cf 1 91, for Yayāti, 1 87 V1 reads 23ab on marg — a) K2 Da4 D4 9 T2 G1 अधृति (D4 °त°, D9 °ते°) (for अधृति°) — b) K2 4 पतिते, M1 6–7 पातितो (for पतितो) G2 [ऽ]पि (for हि) T G1–3 M1 6–7 महाभिषक् (for °भिष°) — c) M6 7 क्षीणपुण्य K4 6 V1 B0 6–9 Da3 a4 Dn1 n4 D8 D2 3 8 G3 [ऽ]पि (for च) G1 ययाद्यति क्षीणपुण्यो — d) D6 7 G3 लोकम् (for लोकान्) D8 अवाप्नुयात् (for °प्तवान्)

24 B0 om 24a–25b V1 reads 24ab on marg — a) B9 T G1 2 6 M1 6–7 धर्मभृता, G2 °विद्यां (for °वतां) — b) Ds1 विदुषी, G1 परेषां (for विदुषां) — c) K6 G3 प्राप्यसे, T1 प्राप्स्यते K1 3 7 D4 6 7 9 सिद्धिं (for बुद्धिं) — d) M1 6–7 सया (for तथा) K4 [ऽ]भिपद्यते, B7 (before corr) [ऽ]भिपश्यते, D4 [ऽ]तिपत्स्यसे, D8 G1 [ऽ]भिवत्स्यसे, D9 [ऽ]पि पत्स्यसे (for ऽभिप) — After 24, K7 Ds2 D4 9 ins

763* स तु विप्रस्तथा पृष्टो राज्ञा जानकिना वने ।
प्रोक्तवानखिलं धर्मं मोक्षाश्रममनुत्तमम् ।

[ (L 2) Ds2 धर्म्यं (for धर्मं) ]

25 B0 om 25ab (cf v l 24) Before 25, B6–9 Da3 Dn1 n4 D8 D2 3 8 G1 ins भीष्म उवाच — a) K2 4 च तु, K6 B7 सत्त्व, Da3 a4 स स्व (for स तु) K6 स्वभावसंपन्न — c) K3 V1 B5–8 Da3 a4 विनियम्य, T2 °वृत्य (for वर्त्य) T1 मुनि, M1 6–7 सत (for मन) K2 reads मन कामाद् twice B7 कामान्, T1 काम (for कामाद्) — d) K6 बुद्धिश् Ds1 स (for ह)

Colophon S1 D6 missing K3 5 B1–5 Da1 a2 Dn2 n3 D1 G4 5 M2–4 absent — *Sub-parvan* K1 3 4 6 7 V1 B6–9 Da3 a4 Dn1 n4 D8 D2–5 7–9 T G1 2 6 M1 5–7 मोक्षधर्म — *Adhy name* K1 2 4 जानु(K4 °न)क्यानुशासन; K6 7 V1 B0 6–9 Da3 a4 Dn1, n4 D8 D2–5 7–9 M5 6 जनकानुशासन; G6 जनककुमारर्षिसंवादो मन प्रतिकूलवर्जन — *Adhy no* (figures, words or both) K6 34, B0 8 136, B7 T1 G1 3 6 132, Dn1 135, Dn4 134, Ds2 M6 133, D8 130, T2 145, G2 148, M1, 6 7 131 — *Śloka no* Da4 Dn1 n4 D8 25.

# २९८

C 12 11543
B 12. 311(10) 1
K 12. 315 1

युधिष्ठिर उवाच ।

धर्माधर्मविमुक्तं यद्विमुक्तं सर्वसंश्रयात् ।
जन्ममृत्युविमुक्तं च विमुक्तं पुण्यपापयोः ॥ १
यच्छिवं नित्यमभयं नित्यं चाक्षरमव्ययम् ।
शुचि नित्यमनायासं तद्भवान्वक्तुमर्हति ॥ २

भीष्म उवाच ।

अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
याज्ञवल्क्यस्य संवादं जनकस्य च भारत ॥ ३
याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः ।
पप्रच्छ जनको राजा प्रश्नं प्रश्नविदां वरः ॥ ४
कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः ।
किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम् ॥ ५
प्रभवं चाप्ययं चैव कालसंख्यां तथैव च ।
वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः ॥ ६
अज्ञानात्परिपृच्छामि त्वं हि ज्ञानमयो निधिः ।
तदहं श्रोतुमिच्छामि सर्वमेतदसंशयम् ॥ ७

याज्ञवल्क्य उवाच ।

श्रूयतामवनीपाल यदेतदनुपृच्छसि ।

## 298

☞ This adhy is missing in Ś1 D6 (cf v l 12 274 13, 283 16)

1 Ds2 reads the ref on marg — a) K1, 3 B6 9 G2 6 M6 वियुक्त (for विमुक्त) — b) B6 9 वियुक्त (for विमुक्त) T1 G1-3 6 तत्त्व (for सर्वं) K1 4 6 7 B6 8 Da3 a4 Dn1 n4 D8 D2-5 7-9 Cn 8 (gloss अज्ञानात्) -संशयात् (for संश्र°) — c) K2 B6 6 8 (marg) 9 M1 5-7 वियुक्त (for विमुक्त) K1 2 4 यद् (for च) — d) B6 6 8 (marg) 9 वियुक्त (for विमुक्त) K7 D4 9 विमुक्त सुखदुःखयोः.

2 a) K2 उभय, M1 6 7 अभव (for °य) — b) K6 V1 B6 6-9 Da4 Dn1 n4 D6 D2 3 5 7 8 अक्षरम्, Da3 अक्षयम्, D4 वाक्षरम् (for चा°) — c) ❀ Ca अनायास, निर्द्वंद्वम् ॥ Cn उपाधिसंपर्केऽप्यप्रच्युतकौटस्थ्यभावम् । ❀ — d) K7 भावान् (for भ°) K1 Da4 Dn4 अर्हसि (for °ति)

3 a) K1 4 वर्णयिष्ये (for वर्त°) K2 6 B6 Da3 Dn1 n4 D8 D6 4 8 T1 G1 3 6 अत्र ते वर्ते (K2 °र्णे) यिष्यामि — c) K1 M1 5-7 यज्ञवल्क (K1 °ल्क्य) स्य G1 याज्ञवल्क्यस्य च संवाद (hypermetric)

4 a) M1 5-7 यज्ञवल्कम् K1 2 4 मुनि- (for ऋषि) — b) K7 V1 B6 9 D3 4 8 9 T2 G1-3 देवरातिर् (for दैव°) ❀ Ca दैवराति, देवरातजनकपुत्र । ❀ — c) K7 पपृच्छ, Da4 प्रपच्छ — d) D4 प्राश्नविदां; D6 °वतां; D7 प्रश्नवतां (for °विदां) K1 2 4 B6 5 Dn4 Ds2 D8 वर, Dn1 Ds1 D2 T1 G2 6 वर (for वर°). B7 प्रश्न प्रश्नविशारद°.

5 Before 5, B6 8 9 Dn1 n4 D8 D2 3 5 T G1 6 ins जनक उवाच — a) K2 कर्मेंद्रियानि, T G1 2 6 कर्तीन्द्रियाणि (for कतीन्द्रि°) K1 3 विप्रेंद्र; B5 राजर्षे (for विप्रर्षे) — b) K1 2 4 6 तथा (for स्मृता) — c) Da4 [अ]व्यक्त (for क्त) K2 परे (for पर) K7 D4 9 महान् (for ब्रह्म) — d) B6 तस्मात्तु (for °च्च) K1 2 4 V1 परमस्ति; M6 °मस्तु (for °तस्तु).

6 a) D7 अभय (for प्र°) K6 D4 वाप्ययं, B6 6 Da3 G1 चाव्यय; Da4 वाव्यय (for चाप्यय) — b) Da4 कालं (for काल) K1 संख्य; K6 7 B5 D2 -संख्या (for -संख्या) — c) K1 3 विप्रर्षे (for विप्रेन्द्र) — d) Da3 a4 मदनुग्रह, D4 त्वदनुग्रहं (for °ग्रह) B5 (marg as in text) T G1 2 6 कांक्षिणे (for °ण)

7 a) G1 पर्यपृच्छामि, M6 परिपृच्छाम (for °पृच्छामि) — b) V1 च (for हि) T1 G6 ब्रह्ममयो (for ज्ञान°) K2 विधि°, B7 निधे° (for निधि°). — d) K4 असंशय°

8 K4 om the ref M1 5-7 याज्ञवल्क (for °वल्क्य) — a) K1 2 4 गुणानाम् (for श्रूयताम्). K2 अवनेपाल — b) K1 4 परि; K2 lacuna (for अनु-) — c) K1 2 4 च पर, T2 परम, M1 7 परमा (for °मं) — d) K2 सांख्यान (for °नां) B7 तत परं (for विशेषत°)

